आह्लाद् विलादूर्ध्वगमोदिताल
शक्तिप्रभा धूपशिखेव भाति ।
यदग्रगां नौमि समस्तभाव-
संहारिणीं तां निजचिद्विभूतिम् ॥८१॥

प्राणप्रवाहौघनिघट्टनेन
यज्ज्योतिराग्नेयमनल्पवीर्यम् ।
उदेत्यसौ दीपवरः प्रदीप्तो
यदग्रगस्तां प्रणमामि देवीम् ॥८२॥

अखण्डितस्वात्ममहावभास-
चित्कुङ्कुमौघः प्रततप्रमोदः ।
सदाङ्गरागः प्रविभाति यस्या-
स्तां नौमि देवीं रमणीयवृत्तिम् ॥८३॥

अक्षवर्गगमनिष्ठितं परं
चित्तभैरववपुर्निवेदनम् ।
यत्प्रियं निरवधि नमामि तां
सुन्दरीमपरबोधबृंहिताम् ॥८४॥

चिन्मृगाङ्कवपुषश्च्युतामृत-
स्रावसम्भृतमहार्घ्यपात्रतः ।
तर्पणं विततमास्थितं सदा
यत्तनोः सततमस्मि तां नतः ॥८५॥

जन्मकुण्डगगनोदरोद्गतश्चित्रभानुरिह भासितत्कटः ।
अक्षपक्षविषयाहुतीः सदा भक्षयन् निरवधिक्रमाक्रमैः ॥८६॥

जाज्वलीति करणेशशक्तिकप्राज्यघस्मरशिखाविराजितः ।
चित्तविभ्रममयेन्धनैः सदा वह्निकर्म तव देव्यवरिथतम् ॥८७॥

इत्थं सदा सद्भिरनादिबोधधामा निकेतं गुरुवक्त्रगम्यम् ।
सम्यक् समाविश्य समर्च्यते या तां नौमि काञ्चिच्चितिमप्रमेयाम् ॥

इयं परस्मादविभिन्नरूपा शिवस्वतन्त्रा क्रमतोऽक्रमेण ।
आदौ परेणाथ परापराख्यभेदेन पश्चादपरेण देवी ॥८९॥

निजस्वरूपं तु विभज्य नित्यं जहाति नैवाप्रतिमप्रभावम् ।
शैवं महः सर्वविभेदमुक्तं निरन्तरं या प्रणमाम्यहं ताम् ॥९०॥

चिदङ्कुरं कामकलास्वरूपं बिन्दुं विचिन्त्यामृततेजसेद्धम् ।
अनाहतोन्मेषनिनादशक्तिचक्रे स्थितं व्योमबिलान्तराळे ॥९१॥

तस्याधरस्थं शशिसूर्यरूपं बिन्दुद्वयं पार्श्वयुगप्रवाहम् ।
तस्याप्यधो वह्निशिखास्वरूपरेखाकृतिं च प्रविलाप्य सम्यक् ॥९२॥

एतं क्रमं ध्यानपरं सदैव त्यक्त्वा क्रमं सर्वविकल्पमुक्तम् ।
ध्यायेन्महासाधकपुङ्गवो यो लभेत् स सिद्धिं परमां शिवोक्ताम् ॥९३॥

मायाकामासनस्थं हृदयपदगतं कामराजस्य साध्यं
ध्यात्वा तद्बाह्यकोष्ठं पुटितमनुपमं वाग्भवं तद्बहिश्च ।
हृङ्कारं कोणषट्के बहिरपि च ततस्त्रिस्थिता तुम्बुरूर्ध्वं
कृत्वा कर्णीबीजकं यत् स्मरति स भुवनं क्षोभयेद् देवि सम्यक् ॥

इदं यन्त्रं समाधिस्थो दग्गोळो केळियोगतः (?) ।
महाकामकलां ध्यात्वा पूजयेद् यः स सिद्धिभाक् ॥९५॥

विद्याधरी सुरवधूरपि सिद्धपत्नी
गन्धर्वदिव्यललनोरगनायिकापि ।
यक्षेश्वरप्रियतमा नरधुर्यरामा
त्वत्सेवकस्य भवतीह वशा सदैव ॥९६॥

एकैकाक्षरसाधनं विधिवरैस्त्वन्मूर्तिमाद्यां परां
ध्यात्वा ये भवपत्नि! साधकवराः कुर्वन्ति तेषां सदा ।
त्वद्दृक्पातपवित्रितैकमनसामत्यद्भुता जायते
सिद्धिर्यद्वशतः सुराधिपमुखा दास्यं स्पृशन्त्यादरात् ॥९७॥

यो लक्षाणि वराङ्गजन्महृदयब्रह्माख्यरन्ध्रात्मना
ख्यातान्यत्र कुलागमे गुरुवरैर्यान्याद्यसिद्धेश्वरैः ।
तद्ध्यानं परितो विधाय निपुणैर्लक्षत्रयं जप्यते
शक्त्युद्दीपनपूर्वकं तु परमा सिद्धिस्ततो जायते ॥९८॥

वश्याकर्षणवाग्भवादिपूरणास्तम्भादिकार्यक्रम-
श्चक्रध्यानसमर्चनादिविधिना सिद्ध्यत्यवश्यं नृणाम् ।
कारुण्यात् तव देवि! निर्मलधियां मोहाभिधानक्षया-
न्मोक्षप्रत्ययदर्शनाय सततं मुख्यानुभावोऽत्र नः ॥९९॥

चतुर्थशक्तिप्रथितं विलाप्य मोहप्ररोहं भवभेददं या ।
विकास निर्द्वन्द्वचितिप्रकाशप्रकाशितां शक्तिमनुग्रहाख्याम् ॥१००॥

विभाति तां नौमि भवाब्धिमध्ये
प्रोन्मग्नजन्तूद्धरणैकदीक्षाम् ।
निर्धामधामक्रमविस्फुलिङ्ग-
प्रपूरिताशेषदिगन्तरालाम् ॥१०१॥

अकृतकपरभक्तिव्यक्तिसंसक्तचित्त-
प्रथितविततबोधस्फारसम्प्रेरणेन ।
कृतमिदमनिकेतध्यानसाध्यैकमूर्ते-
र्निरुपमनिजसंविद्देवतामाययोच्चैः ॥१०२॥

गुरुवरवदनोत्थप्राज्यसत्सम्प्रदाय-
क्रमपरमरहस्यैर्बृंहितैर्वाग्विलासैः ।
त्रिपुरमथनकान्ताभक्तिसक्तेन यत्तत्
स्तवकममलचित्ता हन्त शृण्वन्तु सन्तः ॥१०३॥

अनन्तशक्तिकृच्चेदं स्तोत्रं तव महेश्वरि! ।
यत् तेन देवि! भक्तानां भुक्तिमुक्तिमहाफलम् ॥१०४॥

अनन्तशक्तिस्तवः
समाप्तः ।

---

## कामाक्षीस्तवः ।

कण्ठूलगण्डविगळन्मदवारिधारा-
गण्डूषपण्डितमधुव्रतमण्डिताय ।
शुण्डालबन्धुरमुखाय तुषारभानु-
खण्डावतंसकलिताय नमः शिवाय ॥ १ ॥

रसाळतलभूषितं रजनिबन्धुना भूषितं
समग्रमनुकम्पया सविधसेवितं कम्पया ।
नमत्सुमनसं पदे नमत सन्ततं सम्पदे
गिरीशमधिकाञ्चि तं गिरिसुताकुचाङ्काञ्चितम् ॥ २ ॥

जयन्ति श्रीमन्तो जडिमहिमसंहारमिहिरा
मनीषामाकन्दप्रसवनववासन्तदिवसाः ।
गिरां नाथे! नानारसभणितियोषाभिसरण-
प्रदोषा निर्दोषास्तव चरणसन्नामविधयः ॥ ३ ॥

क एष प्रस्तावस्तव नवनसन्नाहपदवी-
दवीयो देवीदं धिषणधिषणानैपुणमपि ।
तदास्तामुद्योगः स्तुतिवचसि याचे पुनरिदं
समस्तोऽत्र स्तोत्रीभवतु मम सञ्जल्पनविधिः ॥ ४ ॥

---

This is a Stotra in praise of Kāmākṣi, the goddess installed in the temple of Kanchi. There is only one Ms. of this in our collection, Viz. Ms. No. L. 103.

सदा याचं याचं कथितबहुवाचं जनमिमं
प्रति क्रोधो वेधोरमणि! करणीयो न कलया ।
न योगप्रावीण्यं न च बहुविधस्तोत्रपटिमा
न वा सेवादाक्ष्यं किमिह विदधे याचनमृते ॥ ५ ॥

जतुद्रावं देवि! द्रवतु जवतश्चित्तजडिमा
शरत्पद्मोन्मीलं मम विलसदुन्मीलतु मनः ।
मुखाद्वीची वाचां त्रिदिवविगळन्निर्जरधुनी-
तरङ्गाळीगाळं गळतु मधुनिष्यन्दमधुरा ॥ ६ ॥

जगन्नाथे! जाल्मं निविडजडिमग्रन्थिजटिलं
जनं दीनं मैनं जननि! मनुथाः स्मान्यशरणम् ।
प्रमीलाप्रम्लानं पदयुगळनाळीकविगळ-
न्मधूळीपाळीभिर्मम सरजसं क्षाळय मनः ॥ ७ ॥

जगन्मातर्जातप्रथिमनि मनीषाजडिमनि
स्तृणाने खिन्दानः किमिव मनवै किं वितनवै ।
प्रसीदासीदात्मन्यखिलदुरितोत्सादिनि! दिने
दिने दीनेऽदीने! मयि वितर कारुण्यकणिकाम् ॥ ८ ॥

करे वामे वामे! कमलमृदुळे पुस्तकधरं
परस्मिन् साक्षस्रक्स्फटिकनिभमत्रासवरदम् ।
भवत्वन्तः साक्षादकृपणकृपाकन्दळमिळत्-
कटाक्षव्यापारं वपुरुपनिषज्जीवितमिदम् ॥ ९ ॥

---

कृपाकोपाटोपस्फुरितपदपद्मास्यदळिताद्
घनस्वान्तध्वान्तप्रकरकरिसन्दोहशिरसः ।
समुन्मुक्ता मुक्तामणय इव शुद्धा भणितयो
भवद्भक्तास्येभ्यो भगवति! विसर्पन्ति परितः ॥ १० ॥

ममान्तर्वाणि! त्वं हर तिमिरमित्यर्थनविधां
विधास्यन् यस्तस्मै पदयुगळमात्रं कथयते ।
असौ शास्त्रज्ञत्वं वरयितुमुपक्रान्त इति तद्
ददानः सद्यस्ते जयति सदयासम्भ्रमरसः ॥ ११ ॥

असौ सेवा दावे रुदितमियमिज्या जललिपि-
र्गजस्नानं ध्यानं तदपि स जपो भस्मनि हुतम् ।
प्रणामो नामष प्रकृतिजळमूकाङ्घ्रिपतनं
यदम्बालम्ब्येत प्रतिदिनमनुद्दिश्य भवतीम् ॥ १२ ॥

सजीवो मा जीवन् भवति बत मा जाग्रदपि मा
विजानन् मा ध्यायन् जनजननि! तस्यास्त्वजननिः ।
न यस्त्वामाशास्ते न विनमति न स्तौति मनुते
न नोपास्ते नाध्येत्यवति न वृणीते न च सकृत् ॥ १३ ॥

गळद्दम्भां शुम्भत्पृथुलकुचकुम्भां हृतशशि-
प्रभाडम्भां सम्भावितलिखितगुम्फाजपपटाम् ।
मनस्तम्भारम्भप्रथुमनि (?) भजे त्वां कृतकृपा-
परीरम्भामम्भोरुहसदनसम्भोगकलिकाम् ॥ १४ ॥

भवत्या नित्योत्तंससितसितसुधाप्लुतिविगळत्-
सुधासारस्रोतोविसर इव हृत्पङ्कजजुषः ।
नृणां त्वद्ध्यातॄणां नववदननालीककुहर-
प्रणाळीनाळेन क्षरति कवितासौरभभरः ॥ १५ ॥

गतिखिन्नां वन्यस्तबकनिवहन्यासविलसत्-
कचां केचित् काचावलिखचितनीचेतरकुचाम् ।
हृदि त्वामीक्षन्ते कपटमृगयोः पत्रपटली-
दुकूलां कालारेरनुपदचरीं काननचरीम् ॥ १६ ॥

धरे! दुर्गां स्वर्गाधिपविमतवर्गापहरणीं
महारंहस्सिंहप्रवरपरिविन्यस्तचरणाम् ।
करे वल्गत्खड्गप्रविहितजगत्राणविभवां
भवार्तिव्यावृत्त्यै भगवति! भजन्ते हि भवतीम् ॥ १७ ॥

इदं स्यादेतत् स्यान्मम पुनरदः स्यादिति सदा
श्रुतं वा दृष्टं वा सकलमुपयाचे न भवतीम् ।
सकृन्मह्यं मुह्यन्मलिनमनसे मातरमलां
त्वदीये दीयेत द्युतिमति पदे भारति! रतिम् ॥ १८ ॥

अथो या वा सा वा भव भवरमेशाम्बुजभुवा-
मपीड्ये! पीड्येऽहं जनजननि! जाड्येन न यथा ।
तथा भूयाद् भूयानिह तव विभूतिस्तवविधिः
कथंकारं कर्तुं कविभिरपि शक्येत सकलः ॥ १९ ॥

---

# * मुक्तिपुरस्थदेवीस्तोत्रम् ।

निखिलनिगमवेद्यं तावकानं चरित्रं
निगदितुमसमर्थस्तत्त्वबोधस्वरूपे ।
भगवति तदपि त्वां भक्तिभाराकुलोऽहं
कथमपि जगदीशे स्तौमि मुक्तिस्थलस्थे ॥ १ ॥

सततविनतभक्तव्रातचित्ताम्बुजार्ति-
प्रशमनकुशलोद्यद्रागपादारविन्दे ।
अगतिरगसुतेऽहं त्वत्प्रसादाभिलाषी
भगवति नियतं त्वां नौमि मुक्तिस्थलस्थे ॥ २ ॥

जननमरणघोरक्ष्वेलवाराकरान्तः-
पतनविवशलोकत्राणदक्षान् कटाक्षान् ।
जननि तव दयार्द्रान् निन्दितेन्दीवराभा-
ननुदिनमाय मह्यं देहि मुक्तिस्थलस्थे ॥ ३ ॥

विशिष्टपदपङ्कजस्रुतमरन्दसंसेवन-
प्रहृष्टधरणीसुरभ्रमरसञ्चयैरञ्चिते ।
त्रिविष्टपसमे गुणैर्महति मुक्तिगह स्थिता-
मभिष्टुतकथामुमामनिशमाश्रये शाश्वतीम् ॥ ४ ॥

---

* This is a Stotra in praise of the goddess of Mukti-pura. Muktipura seems to be the sanskritised form of Mūkkutala, a famous temple in Malabar. The present edition is based on a palm leaf manuscript No.804-B, preserved in this institution. Nothing is known about the authorship of the stotra. *Ed.*

अतित्वरमुदित्वरप्रणयपेशलालोकन-
प्रवृद्धकुतुकाकुलस्मरहराङ्गसङ्गोत्सुके ।
जगात्रितयभूषणं जननि मुक्तिगेहास्थिते
पदद्वितयमन्वहं मयि निधेहि शैलात्मजे ॥ ५ ॥

सरोजदळलोचनां सततलिप्तगोरोचनां
विनोदितगजाननां विमलपूर्णचन्द्राननाम् ।
नमामि गिरिनन्दनां नतविरिञ्चिसङ्क्रन्दनां
विवेकिकृतभावनां विहितमुक्तिगेहावनाम् ॥ ६ ॥

सुरासुरनमस्कृते सुललिताङ्गदालङ्कृते
मुनीन्द्रनिवहादृते मुदितभक्तलोकावृते ।
मनोहरतराकृते मदनवैरिसम्मानिते
महेश्वरि नमोऽस्तु ते महितमुक्तिसद्मास्थिते ॥ ७ ॥

मनोज्ञनयनाञ्चलं मनसिजाहिते चञ्चलं
कुचद्वयजिताचलं घुसृणरञ्जितोरस्थलम् ।
महत्तमदयाकुलं मनसि मे सदा निस्तुलं
महः स्फुरतु निश्चलं महितमुक्तिगेहोज्ज्वलम् ॥ ८ ॥

मनोजन्मारातेर्महिषि महिषध्वंसिनि शिवे
दुनोम्यापन्नोऽहं मरणमनुचिन्त्यातिभयदम् ।
मनोज्ञं ते पादद्वयमरुणपाथोजसदृशं
विनोदाय स्यान्मे विलसिततना मुक्तिनिलये ॥ ९ ॥

भवाम्भोधिं घोरं विषयचयकल्लोलविषमं
जवादुत्तर्यार्तिव्यसनशमनात्यन्तनिपुणे ।
भवानि त्वन्नेत्रप्रसृतगुरुकारुण्यजलधौ
भवानि स्नातोऽहं दिवसमनु मुक्तिस्थलगते ॥ १० ॥

विमोहाद्यैर्बद्धो विवशतरचित्तोऽहमनिशं
प्रसादं ते लब्धुं परमसुखसन्दायिनि शिवे ।
रमानाथाम्भोजासनहरिहयाद्यादृतगुण
नमामि त्वां भक्त्या मुहुरपि च मुक्त्यालयगते ॥ ११ ॥

दुर्गां हतरिपुवर्गां दुर्गायितमुक्तिसदनसन्निहिताम् ।
भर्गादृतामुपासे सर्गावनहरणकर्तृभूतां ताम् ॥ १२ ॥

शम्बररिपुहरदयित तुम्बुरुभृगुनारदादिविनुतपदे ।
अम्बुरुहाक्षि सदा मामम्ब रमे पाहि मुक्तिगेहगते ॥ १३ ॥

स्मरशरनिकरविदारितपुरहरसुखवितरणातिनिपुणतनो ।
उरुतरदुरितमशेषं परिहर मम गौरि मुक्तिपुरलसिते ॥ १४ ॥

चण्डतराहितमण्डलखण्डनचण्डे नमोऽस्तु हतमुण्डे ।
कुण्डलमण्डितगण्डे चण्डहरे चण्डि मुक्तिगेहिनि ते ॥ १५ ॥

गिरितनये मयि रमतामरुणतरं चरणयुगलमनुदिवसम् ।
हरदयिते सुरमहिते वरमयि ते मुक्तिगेहपरिलसिते ॥ १६ ॥

अद्रीशनन्दिनि दयामृतवारिराशे
विद्रावितारिनिवहे नतलोकबन्धो ।
भद्रार्थदे निजपदाब्जजुषां जनानां
रुद्राणि मुक्तिनिलयाधिगते नमस्ते ॥ १७ ॥

कीनाशदण्डमनुचिन्त्य भयेन नित्यं
स्नानासनादिषु च नोत्सुकमानसं माम् ।
मेनाशयातिसुखदायिनि पाहि बद्धं
नानाशया जननि मुक्तिपुराधिवासे ॥ १८ ॥

सुम्भादिघोरतरवीरसुरारिवृन्द-
डम्भापहे नतजनावनलोलबुद्धे ।
जम्भारिवन्दितमुमे चरणद्वयं ते
सम्भावयामि हृदि मुक्तिनिकेतनस्थे ॥ १९ ॥

हस्तालसत्त्रिशिखकृत्तलुलायशस्त-
मस्तातिशोभितमनोज्ञपदारविन्दे ।
चित्ताम्बुजं मम पुनीहि समाश्रितानां
हृत्तापहारिणि लसत्तनु मुक्तिगेहे ॥ २० ॥

गर्वादिदोषरहिताशयसाधुलोक-
निर्वाणदाननिपुणे करुणापयोधे ।
सर्वापराधमपि मे सततं क्षमस्व
शर्वाणि मुक्तिपुरवासिनि शैलकन्ये ॥ २१ ॥

शरणागतस्य करुणानिधे शिवे
हर सारसाक्षि तरसा ममामयम् ।
चरणं त्वदीयमरुण हृदम्बुजे
कलयामि मुक्तिनिलयाधिवासिनि ॥ २२ ॥

उरुमेहरोगपरिमोहितः शिवे
करवै किमद्य पुरवैरिवल्लभे।
विधिना हतं त्वमधुना सदैव मां
परिपाहि मुक्तिपुरवासलालसे ॥ २३ ॥

चरितानि देवि दुरितापहानि ते
परिकीर्तयानि सुरकीर्तितान्यहम् ।
अयि त महेशदयिते दया भवे-
दवनाय मुक्तिभवनाधिवासिनि ॥ २४ ॥

सजलाम्बुदनीलबालभारे निजलावण्यविमोहिताङ्गजारे ।
अचलाधिपनन्दने मतिः स्यादचला मे त्वयि मुक्तिगेहवासे ॥ २५ ॥

मदनान्तकवल्लभे शिवे ते वदनाम्भोरुहमेव सर्वदा मे।
वितनोतु सुखं समन्दहासं सुतनो मुक्तिनिकेतनाधिवासे ॥ २६ ॥

गळसीमनि लम्बमानशुम्भत्तुळसीदामलसद्भुजान्तराळम् ।
कळभाषिणि भासतां मदन्तः कळभामोदिनि मुक्तिगेहगे ते ॥ २७ ॥

गजकुम्भमदापहं त्वदाय कुचकुम्भद्वयमम्ब मानसे मे ।
रथडम्भहरं नितम्बबिम्बं सततं भातु च मुक्तिसद्मसंस्थे ॥ २८ ॥

गजराजकराद्दतोरु मोदादजराराधितपादपङ्कजे त्वम् ।
रुचिराङ्गि शिवे भवान्धकूपादचिरादुद्धर मुक्तिगेहगे माम् ॥ २९ ॥

शरणागतलोकपारिजातावरुणावाजिविधावपारिजाता ।
मरणाधिहरौ शिवे त्वदीयौ चरणौ मुक्तिपुरस्थिते भजेयम् ॥ ३० ॥

ललितां पदशोभिनूपुरोद्यत्कलनादामृतशीतलीकृताशाम् ।
कलहंससमादृतां गतिं ते कलये चेतसि मुक्तिगेहगेऽहम् ॥ ३१ ॥

मुखचन्द्रविनिर्गतां स्मितार्द्रामिवहन्तीममृतोपमां गिरं ते ।
सुखदां शृणवान्यहं विहातुं निखिलार्तिं लसिताङ्गि मुक्तिगेहे ॥ ३२ ॥

नतमोहतमोपहे निजानां हितदे हे हतदेववैरिदेहे ।
अतिशोभितगात्रि मुक्तिगेहे सदयं मामवलोकयानुवेलम् ॥ ३३ ॥

चिकुरादिपदान्तमम्ब चेतोमुकुरान्तः सततं दिदृक्षुमनम् ।
अगराजसुते शिवे त्वमापन्निकरान्मामव मुक्तिगेहसंस्थे ॥ ३४ ॥

मन्मथारिदयिते दयानिधे सन्मनःकुमुदवृन्दचान्द्रिक ।
कल्मषावलिमुमे हराशु मे चिन्मयि त्वमयि मुक्तिगेहगे ॥ ३५ ॥

मुक्तिमन्दिरगते नगात्मजे भक्तलोककमनीयविग्रहे ।
मुक्तिदायिनि भवानि देहि मे भक्तिमेव तव पादपद्मयोः ॥ ३६ ॥

मृत्युतापहरणामृतं नृणामत्युदारमयि ते पदाम्बुजम् ।
नृत्यतादिह मदीयमानसे नित्यदा जननि मुक्तिगेहगे ॥ ३७ ॥

भुवनमङ्गलदीपसमुज्ज्वले भवविषानलदग्धाममं जनम् ।
तव कृपामृतवृष्टिभिरञ्जसा भवति जीवय मुक्तिपुरस्थिते ॥ ३८ ॥

गदसमूहमपोहितुमम्ब त पदसरोजरजोनिचय मुदा ।
वितर मुक्तिनिकेतगते जवादितरदद्य न मे शरणं शिवे ॥ ३९ ॥

दुरितवारिधिसन्तरणाय ते चरितकीर्तनपोतमुपाश्रितम् ।
स्फुरितमुक्तिनिकेतनसङ्गते त्वरितमेनमुमे परिपाहि माम् ॥ ४० ॥

मलयजालसितं शुभदं त्विषां निलयमम्ब तवाननपङ्कजम् ।
सुललितं नियतं हृदि भावये विलसिते वरमुक्तिनिकेतने. ॥ ४१ ॥

जनिमृत्युविनाशिनि पादजुषां मुनिसत्तमसन्नुतसच्चरिते ।
मनसः स्थितिरस्तु ममाविरतं जननि त्वयि मुक्तिनिकेतगते ॥ ४२ ॥

उररीकृतभक्तजने शिवद गिरिराजसुते मम गारि शिवे ।
कुरु रोगविनाशनमाशु शिवे गुरुरागिणि मुक्तिनिकेतगते ॥ ४३ ॥

वरमाल्यसमुज्ज्वलमुक्तिपुरे सुरमानवमानितपादयुगे ।
हरमानसमानसमाधिहरे हर मामकमामयमाशु शिवे ॥ ४४ ॥

इभगामिनि कामिनि कामरिपोः शुभदायिनि दानवनाशिनि माम् ।
परिपाहि कृपामृतवारिनिधे परमेश्वरि मुक्तिनिकेतगते ॥ ४५ ॥

उदाररूपे हितदानशीले पदारविन्दे परचिन्मये ते ।
मुदा रमेणाङ्कधरानुरक्ते सदा रमे मुक्तिपुराधिनाथे ॥ ४६ ॥

सरागयोस्ते पदयोर्महाजना निरागसः सन्ति परागसेवया ।
सरोगमेनं परिपाहि मां शिवे सुरागवन्मुक्तिपुरे विराजिते ॥ ४७ ॥

सुखावहं नित्यमघापहं शुभं मुखाम्बुजं देवि पदाम्बुजञ्च ते ।
सुखेषु दुःखेषु मदीयमानसे चकास्तु मुक्तिस्थलसंस्थिते शिवे ॥ ४८ ॥

प्रसीद विश्वेशि रमेशमाये प्रसीद शश्वत् परमेशजाये ।
प्रसीद भक्तप्रियदानशीले प्रसीद मुक्तिस्थलवासलोले ॥ ४९ ॥

नमोऽस्तु कारुण्यपयोनिधे ते नमोऽस्तु तारुण्यमनोहरे ते ।
नमोऽस्तु मृत्युञ्जयवल्लभे ते नमोऽस्तु मुक्तिस्थलसङ्गते ते ॥ ५० ॥

नमो नमः पर्वतकन्यकायै नमो नमः शर्ववरप्रियायै ।
नमो नमो मुक्तिसुखप्रदायै नमो नमो मुक्तिपुरस्थितायै ॥ ५१ ॥

मातः स्तवं पठति मङ्गलदं य एतं
प्रातः प्रबुद्ध्य भवतीमनुचिन्त्य नित्यम् ।
प्रीतः स मुक्तिपुरवासिनि भक्तियुक्तो
याति क्षणेन तव पादसरोजमेव ॥ ५२ ॥



# श्रीमधुरापुरीस्तुतिः* ।

श्वेतद्वीपमधिष्ठिता सुविपुला सा सत्यलोकस्थिता
चायोध्या च कुशस्थली मधुपुरीत्यत्युज्ज्वला निस्तुलाः ।
पञ्च श्रीकमितुः प्रपञ्चकुहरे पुर्यः स्फुरन्ति स्फुटं
तासां मध्यगता विभाति मधुरा सा हन्त सर्वोत्तरा ॥ १ ॥

काञ्ची काशिपुरी च सा पुनरयोध्या सापि चावन्तिका
मायाख्या च कुशस्थली मधुपुरीत्यत्यन्तपुण्योत्तराः ।
पुर्यः सप्त समुल्लसन्ति परितः क्षोणीतले तास्वहो
मध्यस्था मधुरा विराजति सरोमध्ये यथाम्भोरुहम् ॥ २ ॥

वृन्दारण्यबृहद्वनं मधुवनं तालाटवी श्रीवनं
भद्राख्यं कुमुदाटवी च बकुळारण्यञ्च लोध्राटवी ।
भाण्डीराख्यवनं तथैव खादिरारण्यञ्च कात्याटवी-
त्येतैर्द्वादशभिर्वनैः परिवृता जेजेति सा भूतले ॥ ३ ॥

योगीन्द्रादृतपुण्यतोयभरिता भागीरथीसङ्गता
काळिन्दी परिखेव यत्र सरितामग्रेसरी भासते ।
श्रीगोवर्धनरोहितादिभिरगश्रेष्ठैश्च गोष्ठैर्वृता
सा गोपालपुरी विभाति मधुरा नाम प्रपञ्चोदरे ॥ ४ ॥

---

* स्तुतिरियं 'कूटल्लूर् मन' इति सुगृहीतनाम्नः नम्पूतिरिब्राह्मणाग्र्यात् सम्पादिते ३७५ अङ्काङ्किते ताळीपत्रग्रन्थे अन्तर्गता ।

निर्मान्ति स्मातिरम्यामहह दिविषदो यां पुरैवादिकाले
धर्मासक्तान्तरात्मा बहुयुगमवसद्यत्र मध्वाख्यदैत्यः ।
निर्मायैर्मानवौघैस्सततपरिगता निर्मला शर्मदात्री
सेयं निर्वाणभूमिर्जयति मधुपुरी सर्वगीर्वाणसेव्या ॥५॥

दिव्यां दिव्यैकभोग्यां मणिगणकिरणापूरिताशेषलोकां
मर्त्यानां दुर्विलोकां मधुसुतमथने यां पुरा कोसलेन्द्रः ।
गीर्वाणानां प्रसादादकृत निजपुरीं धिक्कृतस्वर्गलोकां
तां साक्षाद् ब्रह्मगोपालकदयितपुरीमीक्षिताहे कदा नु ॥६॥

यत्राविर्भूय भूयस्तरनिजकलया गूढमध्यास्त गोष्ठं
यामेवाभ्येत्य भूयः क्षितिपतिमकरोदुग्रसेनं मुरारिः ।
यामग्रे शूरसेनश्चिरमनुबुभुजे वज्रमुख्यास्तथान्ते
सेयं वृष्णीश्वरस्य प्रियतमनगरी लालसीति त्रिलोक्याम् ॥७॥

हृष्टात्मा मुष्टिकारिप्रमुखयदुवरैर्ह्यष्टसाहस्रयोषा-
जुष्टः सम्मृष्टशक्रोपलतुलितरुचिर्यत्र चिक्रीड चक्री ।
चक्राद्यैश्शस्त्रजालैरमितनिजमहश्चक्रविद्योतिताशा-
चक्रैरापालिता सा जयति मधुपुरी शक्रमुख्यैर्निषेव्या ॥८॥

यस्यां यत्सन्निधौ वा क्वचिदपि विपिने यां परीत्य स्थितासु
द्वार्वत्याद्यासु वापि प्रथितहरिहरक्षेत्रतीर्थाङ्कितेषु ।
प्रेता जाताः स्थिता वा न खलु शमलवन्तोऽपि पश्यन्ति घोरान्
प्रेताधीशस्य दूतानपि बत मधुरां तां व्रजेमाशुभान्ताम् ॥९॥

व्युष्ट्वा दिष्ट्यापि यस्याः स्मृतिरखिलनृणां हन्त नक्तन्दिवान्त-
र्जातं सर्वाघजातं क्षपयति तरसा मङ्गळश्चातनोति ।
सेयं श्रेयस्स्वरूपा दिनकरदुहितुः पश्चिमे तीरभागे
गाढं बाभाति पृथ्वीकुचभरकलिता चन्द्रलेखेव पृथ्वी ॥१०॥

नित्यं यत्र परिस्फुरत्सु नितरां पुण्येष्वरण्येष्वहो
रामाद्या निवसन्ति दैवतगणोपास्या हरेर्मूर्तयः।
नृत्यन्त्यप्सरसः सहामरगणैरत्यन्तहर्षोदया-
दित्थम्भूतमहोदया मधुपुरी जेजेति सा भूतले ॥ ११ ॥

दृश्या विष्णुपदोज्ज्वला सुविमला निश्शेषतापार्दिनी
शश्वद्विश्वजनेषु चिद्रससुधानिष्यन्दसन्दोहिनी ।
कालिन्दीसरिदम्बुबिम्बितकलानाथार्धबिम्बोपमा
मौकुन्दी परिलालसीति नगरी सेयं धरित्रीतले ॥ १२ ॥

या गुप्ता मधुना पुरा मधुपुरीत्याख्यामवाप स्फुटां
सद्यः पापनिमन्थनेन मथुरेत्याख्यायते या बुधैः ।
यां लोके मधुरेति चाभिदधते माधुर्यसर्वङ्कषां
वृष्णीनां नियता पुरी विजयते सेयं धरामण्डले ॥ १३ ॥

उद्यद्विक्रमशालिनां निजयशःप्रद्योतशौर्योष्मभिः
खद्योतीकृतलोकपालमहसां चक्रायुधालम्बिनाम् ।
आवासात्किल शूरसेननृपतीनां शौरसेनीति सा
विख्याता भुवने विकुण्ठभवनप्रख्या विजेजीयते ॥ १४ ॥

यस्यां ध्यातुर्मुकुन्दः प्रदिशति भगवानाशु मुक्तिं विशेषा-
द्यस्यामष्टच्छदाढ्या विकसति विलसच्चित्तपद्मं त्रिलोक्याः ।
यस्यां तिष्ठन्ति हृष्टास्सततमपि हरिं द्रष्टुमष्टौ दिगीशा
विश्वोत्कृष्टा सुपुष्टा विलसति मधुरा नाम सा राजधानी॥१५॥

अश्रान्तानन्तशक्तेः पशुपकुलशिशोर्नित्यलीलानिकेतै-
र्विश्रान्त्याद्यैः पवित्रैर्हरिहरगिरिजामन्दिरैरङ्कितायाम् ।
अश्रान्तं हन्त विश्वेश्वरमहितमहाविष्णुपुर्याममुष्यां
विश्रान्तिं स्वान्त! कुर्यास्त्वमिह भवपथे मा वृथैव व्यथेथाः ॥१६॥

यस्यां भीमोर्मिचक्राहतिमतिपरुषां दूरतो वारयन्त्यां
श्रीमद्वैकुण्ठनामा पशुपकुलशिशुः कोऽपि सत्कर्णधारः ।
कालिन्दीतीरनिष्ठां यदुपतिनगरीनामधेयां गरिष्ठां
संसाराब्धेस्तरीं तामतुलसुखकरीं गाढमद्यावलम्बे ॥ १७ ॥

यस्यां हा हन्त विश्वाद्भुतमनुजकिशोराकृतेश्चक्रपाणे-
र्लीलावंशीरवास्वादनपरमाचिदानन्दसिद्धा निमग्नाः ।
योगीन्द्रास्ताद्विकुण्ठास्पदमभिलषितं नाधिरोढुं क्षमन्ते
तस्यै गोपालपुर्याः शिव शिव! महिमोद्रेकसीम्ने नमोऽस्तु॥१८॥

गाढोद्भासिकुशस्थलीमुखजगन्नाथाधिवासस्थली
मध्यस्थं निजरोचिषैव हरितामापूरयन्मण्डलम् ।
श्रीमन्माधुरमण्डलं विजयते मध्येधरामण्डलं
ज्योतिर्मण्डलमध्यगं दिवि यथा तारापतेर्मण्डलम् ॥ १९ ॥

श्रीगोपालकमूलमूर्तिरमला सारा सलीलोत्सुका
तारुण्योदयरामणीयकहठाकृष्टत्रिलोकीमनाः ।
यस्मिन् खेलति वेणुनादलहरी निर्भर्त्सिताशामुखा
तस्मिन् माधुरमण्डले भवतु मे गुल्मादिजन्मापि वा ॥२०॥

इत्येतां मधुरापुरीस्तुतिकथां श्रुत्यन्तसारोदितां
प्रत्यूषे प्रतिबुध्य शुद्धमनसा नित्यं पठन् मानवः ।
मृत्योर्मस्तकदर्पिताङ्घ्रिरखिलान् भुक्त्वेह भोगोत्करा-
नत्युत्कृष्टमकुण्ठधाम तदहो वैकुण्ठधाम व्रजेत् ॥ २१ ॥

---

॥ श्री ॥

# आर्याशतकम् ।

( शार्ङ्गोद्याननिवासिन्यम्ब स्तवः । )

आर्यां परमैश्वर्यां धार्यां हृदये महद्भिर्ऋषिवर्यैः ।
मर्यादातीतगुणोदार्यां शम्भोः समाश्रये भार्याम् ॥ १ ॥

गाङ्गेयसमाभाङ्गीं गङ्गारङ्गोत्तमाङ्गतन्वङ्गीम् ।
शार्ङ्गोद्यानसुभङ्गीमङ्गीकुर्मोऽन्तरेण मातङ्गीम् ॥ २ ॥

करुणार्द्रनयनकोणां तरुणाम्भोजन्मरम्यचरणयुगाम् ।
हरिणाङ्कचूडरमणीमरुणाभां देवतां परामीडे ॥ ३ ॥

निहतामरारिवर्गां निर्धूतनमज्जनारिषड्वर्गाम् ।
कलयेऽहं वनदुर्गां कारुण्यसुधार्द्रलोचनविसर्गाम् ॥ ४ ॥

---

*The Āryāśataka in praise of the Goddess of the Śārṅgodyāna temple (Cāmakkāvu temple near Pandalam, Chenganoor Taluq) is based on a Ms. (No. 16620 B) in this Library which originally-belonged to the Kilimānūr Palace. The work consisting of a century of verses composed in the metre Āryā remains anonymous at present. It is evident from the heartfelt devotion which pulsates in every line of the work that the author was a great devotee of the Goddess. The rich vocabulary and the melody of diction show that the work is from the pen of a poet of no mean merit.*

कारुण्यपरमकोटीं कोटीराबद्धहिमकरवधूटीम् ।
पाटीरसुरभिशाटीं गाढीकुर्मोऽन्तरुल्लसन्मकुटीम् ॥ ५ ॥

मन्दस्मितार्द्रवदनां मन्दारलतां पदारविन्दजुषाम् ।
इन्दीवरदलनयनामिन्दुकलापीडसुन्दरीं वन्दे ॥ ६ ॥

दलितेन्दीवरनयनां गळितकलङ्कोडुराजसखवदनाम् ।
अळिकळभविलसदळकामळिकाक्षप्रेयसीं भजे काळीम् ॥ ७ ॥

अम्बां जगदवलम्बां बिम्बाधरकान्तिविजितबन्धूकाम् ।
लम्बाळकनिकुरुम्बां लम्बोदरमातरं समालम्बे ॥ ८ ॥

सम्भाविताङ्घ्रिकमलां जम्भारिप्रमुखसर्वगीर्वाणैः ।
अम्भोरुहदलनयनां शम्भोः सम्भोगसम्पदं वन्दे ॥ ९ ॥

करिकळभकुम्भविलसत्कुचकुम्भां सम्भ्रमत्कुसुम्भाभाम् ।
अम्भोजासनविनतामम्भोजाताक्षसोदरीं वन्दे ॥ १० ॥

आशासितफलदात्रीमाशापालाभिवन्दिताङ्घ्रियुगाम् ।
नाशायाशेषविपद्राशीनामीशवल्लभां कलये ॥ ११ ॥

पङ्कजसंभवविनतामङ्काविहीनेन्दुबिम्बसमवदनाम् ।
कुङ्कुमसमानवर्णां शङ्करवरवर्णिनीं समालम्बे ॥ १२ ॥

कुलिशायुधमुखविनुता कलशाम्भोराशिशायिसहजाता ।
कुलशैलवरतनूजा फलशालीदं तनोतु मे जन्म ॥ १३ ॥

पार्वणसुधांशुमण्डलगर्वसमूलापहरणनिपुणमुखीम् ।
पर्वतपरिवृढकन्यां सर्वजगन्नायिकामहं वन्दे ॥ १४ ॥

संसारसागरतरीं पुंसां हंसातिशायिमृदुगमनाम् ।
शंसन्मणिमञ्जीरां संसेवे सर्वमङ्गलां नित्याम् ॥ १५ ॥

एणाङ्ककलितचूळीं वाणीमाधुर्यनिर्जितमधूळीम् ।
एणीसमाक्षिकेळीं प्रीणीमः प्रेक्ष्य गिरिशपुण्याळीम् ॥ १६ ॥

कल्याणशैलनिलयां चिल्लयाहितविश्वसृष्टिगुप्तिलयाम् ।
कल्याणीं हरजायां तुल्यातीतां समाश्रये विजयाम् ॥ १७ ॥

नळिनान्तर्दळनयना पुलिनाहङ्कारहारिपृथुजघना ।
मलिनेतरमृदुवसना फलिनं कुर्यान्ममेप्सितमपर्णा ॥ १८ ॥

धन्यां गिरिवरकन्यां मुरहरमान्यां भजाम्यसामान्याम् ।
निहतासुरवरसैन्यामितराश्रयशून्यसज्जनशरण्याम् ॥ १९ ॥

काळीं कल्लोललसच्चिल्लीयुगलीं मनोज्ञतनुवल्लीम् ।
कचकलितचारुमल्लीं कलय शम्भोः शिरोलिपिमतल्लीम् ॥ २० ॥

कलये कुलगिरिपरिवृढकलिततपोदानराशिपरिपाकम् ।
मौलिलसदिन्दुपाकं दलितवलारातिवैरिवरलोकम् ॥ २१ ॥

बालार्करुचिररत्नं हेलानिःशेषिताखिलसपत्नम् ।
कलय चिन्तारत्नं कुलगिरिराजन्यजन्यसद्रत्नम् ॥ २२ ॥

बलिमथनधातृपूज्यं मलिनेतरचित्तवृत्तिहृद्भोज्यम् ।
कलये सुतरां प्राज्यं कालप्रध्वंसिसुकृतसाम्राज्यम् ॥ २३ ॥

नवरविकिरणारुण्यं नतजनविश्रान्तपरमकारुण्यम् ।
तुलितेतरलावण्यं कलये कैलासवासिनैपुण्यम् ॥ २४ ॥

कलये निजपदभाजां सुलभां कळभापहासिकळगमनाम् ।
अळिभास्वत्कवरीकां हरभार्यां मकुटशोभि(शिशुरशशि)भार्याम् ॥२५॥

याने कळहंसमयीं भाने बालार्ककोटिकिरणमयीम् ।
सञ्चिन्तये भवानीं सन्तानलतामभीष्टफलदाने ॥ २६ ॥

निखिलजगज्जनयित्रीं कुवलयसङ्कोचदानपटुनेत्रीम् ।
कलये करुणापात्रीं कुलपर्वतराजजन्मफलदात्रीम् ॥ २७ ॥

करुणासारनिधानं कनकसमाभिख्यमुख्यपरिधानम् ।
कलयेतरां प्रधानं कण्ठेकालस्य भव्यमपदानम् ॥ २८ ॥

नेत्रे कारुण्यवतीमारुण्यवतीं मनोज्ञतरगात्रे ।
स्तोत्रे निजभक्तानामामोदवतीं भजामि हैमवतीम् ॥ २९ ॥

नवमणिकुण्डलकर्णां नळिनासनवासवादिकृतवर्णाम् ।
कमनीयहेमवर्णां करुणापूर्णां समाश्रयेऽपर्णाम् ॥ ३० ॥

आद्यामपि चानाद्यामनवद्यां श्रुतिशिरःशतैर्वेद्याम् ।
स्वर्गापवर्गपद्यां हृद्याकारां स्मरामि साद्विद्याम् ॥ ३१ ॥

सम्भरितभूरिकरुणं जम्भारिप्रमुखसेव्यमृदुचरणम् ।
सम्भावये पुराणं शम्भोस्सम्भोगयोग्यमाभरणम् ॥ ३२ ॥

चित्ररुचिनेत्रपाळीकेळीलाळित्यलाळितकपालिम् ।
करुणाशालि विशालं कलये प्रालेयशैलपुण्यफलम् ॥ ३३ ॥

विमथितविबुधातङ्कां हिमकरमार्ताण्डकलितताटङ्काम् ।
मकुटालसन्मृगाङ्कां कलये विद्ध्वस्तभक्तहृत्पङ्काम् ॥ ३४ ॥

भुजधृतमणिमयवलयामलयां निर्धूतनम्रलोकभयाम् ।
निरवधिदयाममेयां हरजायामाश्रय महामायाम् ॥ ३५ ॥

खद्योतितादिमोद्यत्प्रद्योतनकोटिविग्रहमयूखाम् ।
मौलिधृतचन्द्रलेखां कलयेऽहं खण्डपरशुवृषरेखाम् ॥ ३६ ॥

सद्रक्षणात्तनिद्राविद्रावितरौद्रदैत्यवरवीरा ।
भद्राणि मे प्रदेयाद्रुद्राणी शमयताच्च हृद्रोगान् ॥ ३७ ॥

दुर्जनसज्जनशिक्षारक्षादक्षा चराचराध्यक्षा ।
दाक्षायणीह रक्षेत् पक्षान्तर्क्षेशदानदक्षाक्षा ॥ ३८ ॥

हरिविधिविहितादरणां हरिहयगोपारुणांशुकावरणाम् ।
हरिदीशवन्द्यचरणां हरिणाक्षीं नौम्युमां वराभरणाम् ॥ ३९ ॥

कुण्डलमण्डितगण्डा खण्डितचण्डतरचण्डमुण्डबला ।
शुण्डोपमोरुकाण्डा खण्डतान्मे भयानि चामुण्डा ॥ ४० ॥

आर्तार्तिहरणदीक्षा धात्राद्यैः कीर्तनीयगुणवार्ता ।
कात्यायनीह रक्षेन्नेत्रान्तालोकलेशमात्रेण ॥ ४१ ॥

हारीभूताहीश्वरनारीं सौन्दर्यवारिनिधिलहरीम् ।
ऊरीकरोमि गौरीं नारीलोकाभिमानमूलहरीम् ॥ ४२ ॥

खर्वेतराणि भूयस्सर्वविनिन्द्यान्यशर्ममूलानि ।
सर्वाणि शमयतान्मे शर्वाणी झटिति दुरितकर्माणि ॥ ४३ ॥

पिष्टातिदुष्टलोका शिष्टैस्तोष्टूय्यमानगुणकाष्ठा ।
इष्टा प्रियाष्टमूर्तेः कष्टावस्थां पिनष्टु मे हृष्टा ॥ ४४ ॥

निष्कासितारिसार्थं निर्मूलितसकलसज्जनानर्थम् ।
सर्वागमपरमार्थं संसेवे शर्वभोगपरमार्थम् ॥ ४५ ॥

पदनखरुचिविभ्राजितसकलदिगन्तं सुमङ्गलोदन्तम् ।
कलयेऽहमनाद्यन्तं श्रुतिसिद्धान्तं त्रिशूलिशुद्धान्तम् ॥ ४६ ॥

निर्धूतनिखिलबाधं निर्जरवैरिप्रसारितक्रोधम् ।
कलये निरवधिबोधं कालारातेः प्रधानमवरोधम् ॥ ४७ ॥

करुणासुधारसार्द्रा कमनीयरुचा निराकृतहरिद्रा ।
पदकमलनमितरुद्रा रुद्राणी मे हिनस्तु दारिद्र्यम् ॥ ४८ ॥

परिकलितहेमकाञ्ची करतलधृतचापबाणसृणिपाशा ।
परिणतशरदिन्दुमुखी करिकुम्भकुचा विभातु गिरिशसखी ॥ ४९ ॥

रात्रीसगोत्रगात्री रात्रीशहुताशसवितृनेत्री माम् ।
धात्रीधरेन्द्रपुत्री पात्रीकुर्यात् कटाक्षमात्रस्य ॥ ५० ॥

मुष्णातु समुदितोदयदुष्णांशुसहस्रकोटिरोचिष्णुः ।
कृष्णानुजान्तरुष्णं विष्णुविरिञ्चादिपूजिताभीक्ष्णम् ॥ ५१ ॥

मुनिहृदयविहितलास्यं मुखरुचिरचितेन्दुमण्डलालस्यम् ।
कलितानतजनदास्यं कलये कैलासनिलयसारस्यम् ॥ ५२ ॥

कनकमयकुण्डलाङ्गदकाञ्चीदामाभिरामतमसुषमा ।
दिशतु मम लोकमाता सीमातीतामचञ्चलां लक्ष्मीम् ॥ ५३ ॥

दुग्धहविर्मधुमद्यैश्चातुर्वर्ण्येन तर्पिताध्यर्घम् ।
सकलं परापरमयी सफलं कुर्यान्ममेप्सितं त्रिपुरा ॥ ५४ ॥

वलमथनकुवलयाक्षीं चिकुरभरभ्रमरमुखरचरणयुगाम् ।
कुलशैलराजचेतःकुमुदशरच्चन्द्रचन्द्रिकां कलये ॥ ५५ ॥

अन्धकपरिपन्थिमनःक्षीरधिमन्थानशैलपृथुलकुचाम् ।
सिन्धुरपरिवृढबन्धुरमन्थरगमनां स्मरामि जगदम्बाम् ॥ ५६ ॥

परमेशचित्तमदगजनिगलायिततरलचिल्लियुगलं मे ।
विदलयतु निखिलदैन्यं मदनमहावीरगर्वसर्वस्वम् ॥ ५७ ॥

कलयतु विशदतराभा जपपटवरपुस्तकाभयाढ्यभुजा ।
रसनाग्रं मम रङ्गं माध्वीमाधुर्यधुर्यभणितीनाम् ॥ ५८ ॥

कारणभूता जगतः पालनसंहारकरणधौरेया ।
व्रातं ममाशु विपदां माता लोकस्य सञ्जरीहर्तु । ५९ ॥

वरिवासितधृतपिनाकां निरुपमकारुण्यसम्पदतिरेकाम् ।
कुलशिखरिवरपताकां कलये नमदमितविसरदवलोकाम् ॥ ६० ॥

प्रालेयजालशीतलशैलकुलोत्तंसचारुकलिके ! माम् ।
कालं निरस्य कारुण्यालोकनलेशभाजनं कुर्याः ॥ ६१ ॥

कैलासशैलनिलयनकारुण्यकटाक्षमूलिके ! तुभ्यम् ।
कलयामि नमोवाकं करुणां कुरु कालयापनमपास्य ॥ ६२ ॥

दरदलितनीलकुवलयदलकुलविलसद्विलोचनद्वन्द्वाम् ।
कलये विषमविलोचननयनचकोरेन्दुकौमुदीं हृदये ॥ ६३ ॥

परमशिवचित्तधैर्यक्षितिधरसन्दलनशातशतकोटिः ।
वैरिगिरिपटलिकां मे वलरिपुसम्भाविता विदारयतात् ॥ ६४ ॥

प्रसरतु ममान्तरङ्गे प्रतिपदभोग्याभिषक्तमस्य सदा ।
भवरोगभीतसव्या दिव्यौषधिका तुषारगिरिजन्या ॥ ६५ ॥

तुहिनगिरिकीर्तिसंपच्चरणसरोजातयुगळवरधूळिः ।
भुवनतलपावनी मे विमलीकुर्यान्मनोमणीमुकुरम् ॥ ६६ ॥

वलमथनविटपिसुरभिलनवसुमपरीहासिचिकुरसौरभ्याम् ।
स्मरदहनभाग्यसीमां निरतिशयानन्दकन्दलीं वन्दे ॥ ६७ ॥

कालिन्दीजलवेणीमालिन्यविधानधीरतरवेणीम् ।
मकरन्दमधुरवाणीमाणिक्यमणीं स्मरामि शर्वाणीम् ॥ ६८ ॥

लोलम्बडिम्भसंहतिसम्भ्रमसन्दायिविसरदलकभराम् ।
निटिलतलविजितवैधवकुटिलकलां सर्वमङ्गलां कलये ॥ ६९ ॥

कारुण्यसरससागरमृदुलहरीपरिणतोल्लसच्चिल्लीम् ।
फुल्लेन्दीवरसोदरसुन्दरनयनां स्मरामि चिल्लहरीम् ॥ ७० ॥

करुणासुधाम्बुधाराशिशिरतरोदारकोमलकटाक्षाम् ।
नासाग्रकलितमणिमयभूषणसारां परां कलां कलये ॥ ७१ ॥

गण्डतलमुकुरबिम्बितकुण्डलितार्केन्दुमण्डलां कलये ।
खण्डपरशूर्जिततपोमण्डलसाम्राज्यपरमसीमानम् ॥ ७२ ॥

विशदतरदशनदीधितिनिन्दितकुन्देन्दुचातुरीलहरीम् ।
शिशिरकरशकलशेखररोषग्रीष्मोष्मचन्द्रिकां वन्दे ॥ ७३ ॥

अरुणांशुदशनवसनज्योतिष्प्रसरातिशोणितदिगन्ताम् ।
शितिकण्ठेनातर्पणसरसास्वादितामृताधरां कलये ॥ ७४ ॥

शारदपार्वणहिमकिरणाशासितदास्यसुन्दरतरास्याम् ।
कलयामि कुलगिरीश्वरविरचितपरमशिवचरणवरिवस्याम् ॥ ७५ ॥

अतिललितगळतलाश्रितधवळतरोदारहारिमणिहाराम् ।
कलयामि निटिललोचननयनालीचन्दनादिगुलिकालीम् ॥ ७६ ॥

करिकुम्भकनककलशाडम्बरसम्बाधिसाधुकुचकुम्भाम् ।
स्मरमथनचित्तशमधनतास्कर्यकलां कृपाकुलां कलये ॥ ७७ ॥

शम्भुकृतसुकृतसम्पत्सम्भृतसौवर्णकुम्भकुचकुम्भाम् ।
निटिलनयनपरिकांक्षितदृढपरिरम्भां स्मरामि जगदम्बाम् ॥ ७८ ॥

रुचिरतरकनकवल्लीसाष्टाङ्गप्रणतभुजततिमतल्लीम् ।
अमरपरिपन्थिवर्गप्रतिभयतरकाळरात्रिमाकलये ॥ ७९ ॥

आनीलरोमवल्लीक्षुल्लीकृतवनपिपीलिकावलिकाम् ।
क्षोणीधरेश्वरयशश्चन्द्रमसः पूर्णिमामुमां प्रणुमः ॥ ८० ॥

शोणनदावर्तरुचिश्रेणीभयदायिनिम्नशुभनाभीम् ।
सायन्तनघनपटलीशोभनवसनां स्मरामि हरसेनाम् ॥ ८१ ॥

कटितटघटितस्फुटरुचिकनकमणीकाञ्चिदलिततटिदाभाम् ।
कुटिलेन्दुमकुटमञ्जुलमञ्चां सञ्चिन्तये कलां काञ्चित् ॥ ८२ ॥

हस्तिवरमस्तकविभवजित्वरविस्तारिहारिजघनभराम् ।
निस्तुलसौन्दर्यसुधारत्नाकरसम्पदं स्मरेदम्बाम् ॥ ८३ ॥

विकटाक्षचित्तमन्मथविकृतिविधानैकतानसुनितम्बाम् ।
कलयामि भुवनमण्डलमन्दिरमणिदीपिकां महामायाम् ॥ ८४ ॥

कुम्भिकरराजरम्भासम्भावितसुरुचिरोरुवरकाण्डाम् ।
सम्भावये निसुम्भाद्यसुरमहारण्यदवशिखिज्वालाम् ॥ ८५ ॥

जानुमयहेमसम्पुटसंसज्जद्धक्तचित्तमणिमुकुराम् ।
भानुहिमभानुकृशानुलोचनसहधर्मिणीं नमस्कुर्मः ॥ ८६ ॥

जङ्घाप्रकाण्डशोभासङ्घास्तमितोच्चकनकदण्डाभाम् ।
हुङ्कारभस्मितासुरजृम्भितबलपटलिकां कलां कलये ॥ ८७ ॥

मञ्जुलशिञ्जानमणीमञ्जीरस्फुरणरञ्जितपदाब्जाम् ।
कञ्जशरवैरिचेतस्सरसिजकलहंसयोषितमुपासे ॥ ८८ ॥

प्रपदप्रभाप्रकाण्डप्रोत्सारितकच्छपच्छविप्रसराम् ।
प्रणुमः प्रालेयगिरिप्रचुरतपःप्रकरनैपुणीश्रेणीम् ॥ ८९ ॥

चरणनमदमरपालीमौलीमाणिक्यरञ्जितनखालीम् ।
नखचन्द्रिकानिरस्तप्रणततमोमण्डलीं कलां कलये ॥ ९० ॥

सुरविटपिमृदुललोहितकिसलयवैकल्यकलनपटुचरणाम् ।
कलयामि चरणकान्तिप्रसरनिरस्तारुणाम्बुजामम्बाम् ॥ ९१ ॥

मणिमयकिरीटकुण्डलकेयूरोदारहारकटकाद्यैः ।
रुचिरैर्भूषणसारैर्भूषितवेषां स्मरामि हरयोषाम् ॥ ९२ ॥

कलयामि कालयक्षीं करतलविलुठत्कराळकरवाळाम् ।
कूळीगणैः परिवृतां काळीपरिवारमण्डलीमौलीम् ॥ ९३ ॥

स्फुटरुचिविटपिविशेषैः पटुतरनिनदैः प्लवङ्गमैश्च भृतम् ।
कलये शार्ङ्गोद्यानं कात्यायन्याः सुखासिकास्थानम् ॥ ९४ ॥

हारिद्ररुचिसमाभा निर्निद्रा दीनरक्षणे माता ।
सौरद्रवीं मयि धुरं दारिद्र्यव्याकुले द्रुतं वहतु ॥ ९५ ॥

भूर्यद्रिमौलिनिलया भूरिद्रविणौघवृष्टिभिर्माता ।
दारिद्र्यघर्मतप्तं मां रुद्राण्यभिषिञ्चतात् क्षणेनैव ॥ ९६ ॥

वन्यां दैन्यौघमयीं धन्या निर्मूलयेत् समूलं मे ।
कन्या तुषारपर्वतजन्या गुण्या कटाक्षशस्त्रेण ॥ ९७ ॥

सर्गस्थित्यन्तकरी जगतः स्वर्गापवर्गदात्री मे ।
दौर्गत्यशिखरिकूटान् दुर्गा भिन्द्यात् कटाक्षकुलिशेन ॥ ९८ ॥

शार्ङ्गोद्यानिवासिनि मातः परदेवते महामाये! ।
करुणां कुरु मयि दीने कालविलम्बं सुदुस्सहं न सहे ॥ ९९ ॥

शार्ङ्गोद्यानिवासिनि कात्यायनि! नः कुरुष्व कल्याणम् ।
करुणामृतपरिवृष्ट्या भूयो भूयो वयं नमस्कुर्मः ॥ १०० ॥

शार्ङ्गोद्यानिवासिनि! मानसवाक्कायकर्मभिर्विहितम् ।
सर्वं मयापराधं मातर्मे त्वं क्षमस्व कारुण्यात् ॥ १०१ ॥

शार्ङ्गोद्याननिवासिन्यम्बायाः पठति नुतिशतीमेताम् ।
भक्त्या यस्तस्य भवेत् कात्यायन्या निरङ्कुशा प्रीतिः ॥ १०२ ॥

---

॥ श्री ॥

# कल्याणस्तवः ।

कल्याणवृष्टिभिरिवामृतपूरिताभि-
लक्ष्मीस्वयंवरणमङ्गलदीपिकाभिः ।
सेवाभिरम्ब! तव पादसरोजमूले
नाकारि किं मनसि भक्तिमतां जनानाम् ॥ १ ॥

एतावदेव जननि! स्पृहणीयमास्ते
त्वद्वन्दनेषु सलिल(स्थगि?स्नपि)तेऽपि नेत्रे ।
सान्निध्यमुद्यदरुणायुतसोदरस्य
त्वद्विग्रहस्य परया सुधयाप्लुतस्य ॥ २ ॥

ईशित्वभावकलुषाः कति नाम सन्ति
ब्रह्मादयः प्रतिभवं प्रलयाभिभूताः ।
एकः स एव जननि! स्थिरसिद्धिरास्ते
यः पादयोस्तव सकृत् प्रणतिं करोति ॥ ३ ॥

लब्ध्वा सकृत् त्रिपुरसुन्दरि ! तावकीनं
कारुण्यकन्दलितकान्तिभरं कटाक्षम् ।
कन्दर्पभावसुभगाः खलु भक्तिभाजः
संमोहयन्ति तरु(णी भु१णीर्भु)वनत्रयेऽपि ॥ ४ ॥

ह्रीङ्कारमेव तव नाम गृणन्ति वेदा
मातस्त्रिकोणनिलये ! त्रिपुरे ! त्रिनेत्रे ! ।
यत्संस्मृतौ यमभटाभिभवं विहाय
दी(व्य१व्य)न्ति नन्दनवने सह लोकपालैः ॥ ५ ॥

हन्तुः पुरामधिगळं परिघूर्णमानः
क्रूरः कथं नु भविता गरळस्य वेगः ।
नाश्वासनाय यदि मातरिदं तवार्धं
देहस्य शश्वदमृताप्लवशीतळस्य ॥ ६ ॥

सर्वज्ञतां सदसि वाक्पटुतां प्रसूते
देवि ! त्वदङ्घ्रिसरसीरुहयोः प्रणामः ।
किञ्च स्फुरन्मकुटमुज्ज्वलदातपत्रं
द्वे चामरे च महतीं वसुधां ददाति ॥ ७ ॥

कल्पद्रुमैरभिमतप्रतिपादनेषु
कारुण्यवारिधिभिरम्ब ! भवत्कटाक्षैः ।
आलोकय त्रिपुरसुन्दरि ! मामनाथं
त्वय्येव भक्तिभरितं त्वयि दत्तदृष्टिम् ॥ ८ ॥

हन्तेतरेष्वपि निधाय मनांसि चान्ये
भक्तिं वहन्ति किल पामरदैवतेषु ।
त्वामेव देवि ! मनसाहमनुस्मरामि
त्वामेव नौमि शरणं जननि ! त्वमेव ॥ ९ ॥

लक्षेषु सत्स्वपि तवाक्षिविलोकिताना-
मालोकय त्रिपुरसुन्दरि ! मां कथञ्चित् ।
नूनं मया तु सदृशः करुणैकपात्रं
जातो जनिष्यति जनो न च जायते वा ॥ १० ॥

ह्रीं ह्रीमिति प्रतिपदं जपतां तवाख्यां
किं नाम दुर्लभमिह त्रिपुराधिवासे ! ।
मालाकिरीटमदवारणमाननीयां
(न्त्वत्सेवते॥त्वां सेवते) वसुमती स्वयमेव लक्ष्मीः ॥११॥

सम्पत्कराणि सकलेन्द्रियनन्दनानि
साम्राज्यदानकुशलानि सरोरुहाक्षि ! ॥
त्वद्वन्दनानि दुरिताहरणोद्यतानि
मामेव मातरनिशं कलयन्तु मान्यम् ॥ १२ ॥

कल्पोपसंहृतिषु कल्पितताण्डवस्य
देवस्य खण्डपरशोः परभैरवस्य ।
पाशाङ्कुशैक्षवशरासनपुष्पबाणा
सा साक्षिणी विजयते तव मूर्तिरेका ॥ १३ ॥

लग्नं सदा भवतु मातरिदं त्वदीयं
तेजःपरं बहलकुङ्कुमपङ्कशोणम् ।
भास्वत्किरीटममृतांशुकलावतंसं
मध्यत्रिकोणमुदितं परमामृतार्द्रम् ॥ १४ ॥

ह्रीङ्कारमेव तव धाम तदेव रूपं
तन्नाम सुन्दरि ! सरोजनिवासशीले ! ।
यत्तेजसा परिणतं वियदादिभूत-
जातं तनोति सरसीरुहसम्भवादि ॥ १५ ॥

ह्रीङ्कारत्रयसम्पुटेन महता मन्त्रेण सन्दीपितं
स्तोत्रं यः प्रतिवासरं तव सदा मातर्जपेन्मन्त्रवित् ।
तस्य क्षोणिभुजो भवन्ति वशगा लक्ष्मीश्चिरस्थायिनी
वाणी निर्मलसूक्तिभारभरिता जागर्ति दीर्घं वयः ॥१६॥

---

॥ श्री ॥

# ॥ केशवाष्टकम् ॥

[ स्तोत्रमिदम् एतद्ग्रन्थशालीये १८२२९ तमे ग्रन्थे 'E' इत्यङ्काङ्कितम् । ]

यदुपायतः सकलभूभुजां वरा
  यदुपा भवन्ति बलवीर्यशालिनः ।
तमसाभिभूतजनदुःखदाहिनं
  तमघौघनाशनमुपैमि केशवम् ॥ १ ॥

अवनीतलार्तिकरदुष्टशान्तये
  नवनीत(हारक)शिशुत्वमागतः ।
यवनेशघातिनमुपायकौशलात्
  पवनाशशायिनमुपैमि केशवम् ॥ २ ॥

शिशुपालरूक्षपरिहासवाक्शर-
  व्रणशान्तये तदनु शुद्धसर्पिषा ।
परिषिच्यमानहृदयं महाहवे
  परवीरघातिनमुपैमि केशवम् ॥ ३ ॥

शशिवंशजातवसुदेवनन्दनं
  शशिशेखरादिसुरवृन्दवन्दितम् ।
शशिवैरिकृन्तनकरारिधारिणं
  शशिमण्डलाननमुपैमि केशवम् ॥४॥

द्विपराजवाहनगृहाङ्गणाद्बलाद्-
द्रुमराज(वाऽहा)रिणमशेषनाकिनाम् ।
अपराजितं सकललोकनायकं
कपिराजकेतुसखमेमि केशवम् ॥ ५ ॥

परिवारभूतगुहनन्दिशोभिने
पुरवैरिणे समरतृप्तिदायिनम् ।
वरवारणायुतबलानुजात्मनः
कुरुवीरजस्य गुरुमेमि केशवम् ॥ ६ ॥

अरुणारविन्ददलचारुलोचनं
करुणाकरं कनकरत्नभूषितम् ।
अरुणानुजध्वजमपारभूतिदं
शरणागतस्य तमुपैमिं केशवम् ॥ ७ ॥

पुरुषं पुराणमजरं जगन्मयं
हरिमिन्दिरापतिमनन्तमच्युतम् ।
परमं परायणमचिन्त्यमक्षरं
परिपूर्णमेकमजमेमि केशवम् ॥ ८ ॥

य इदं पठेन्म (हतिऽनसि) केशवाष्टकं
हरिभावनामृतरसार्द्रभावनम् ।
स विहाय जन्ममरणादिसंसृतिं
परमं प्रयास्यति पदं सनातनम् ॥

---

# *श्रीकृष्णदण्डकम्

वृन्दावने शिशिरमन्दानिलाचलित-
कुन्दादिसूनसुविकासे
वन्दिबहुमुनिपरिषदिन्द्रमुखविबुधवर-
वृन्दपशुपशुपमिळिताशे ।
मणिपल्लवस्तबकसुरशाखिमूलगत-
कनकारविन्दपुटदेशे
परिलसितमसितनवजलदकुलतुलितरुचि
मुरमथनवपुरिदमुपासे ॥ १ ॥

व्यालोलपिञ्छवलयालम्बिसंयमित-
लोलम्बनीलकचपाशं
बालशशिरुचिरतरफालतलधृततिलक-
मालसिततिलकुसुमनासम् ।
मृदुगण्डसञ्चलितमणिकुण्डलं चटुल-
करुणावलोकनविलासं
मधुरलसदधरपुटपरिनिहितकळमुरळि
दशनरुचिविशदमृदुहासम् ॥ २ ॥

ताराळितारुचिहारावलीवलयि-
तोरोविलोलवनमालं
ताररवमणिवलयहारिपृथुभुजयुगळ-
दूरलसदमलनखालम् ।

---

* श्रीकृष्णस्तवात्मकमिदं दण्डकं 154 अङ्काङ्किते ग्रन्थे विद्यमानं केरळीयलिपिलिखितम् अज्ञातकर्तृकं च ।

तरळाङ्गुलीगळितमुरळीनिनादरस-
शिशिरीकृताशमनुवेलं
तनुविलसदुदरतलमनुपमितजघनभर-
परिघटिततटिदुपमचेलम् ॥ ३ ॥

शिञ्जानहेममणिकाञ्चीकलापगुण-
संजातभङ्गि परिपिङ्गं
चारुपृथुमसृणलसदूरुयुगमुपलसित-
जानुयुगमतिसुभगजङ्घम् ।
मणिनूपुराकलितचरणाम्बुजोल्लसित-
नखपङ्क्तिकान्तिजितशङ्खं
व्यतिनिहितपदयुगळमरुणतरचरणतल-
मुरुमहिमनिलयमकळङ्कम् ॥ ४ ॥

———

॥ श्रीः ॥

# ॥ कुमारस्तवः ॥

---

अव्यादपारकरुणं तरुणारुणाभ-
मव्याजसुन्दरमनन्तगुणाभिरामम् ।
अम्भोजशक्त्यभयकुक्कुटशोभिहस्त-
मम्बातपःफलमपत्यमिहेश्वरं नः ॥ १ ॥

आचार्यमागमरहस्यमहामनूना-
माचान्तवारिनिधिदेशिकमाम्बिकेयम् ।
आखण्डलाद्यमरवन्दितमात्मरूप-
मालम्बते मम मनः शरणं कुमारम् ॥ २ ॥

इन्दीवरायतविलोचनमिन्द्रसेना-
नेतारमिन्दुमुखमिन्दुकलावतंसम् ।
इन्द्रानुजार्चित(महर्निश)मिन्दिराया
जामातरं हृदयमिङ्गतु मे कुमारम् ॥ ३ ॥

ईशानधर्मसुतमीश्वरमीश्वराणा-
मीशित्वमुख्यफलदं गतिमीयुषः स्वम् ।
ईहानुजातजगदण्डकमीक्षितार-
मीडेऽहमीप्सितसुपर्वतरुं कुमारम् ॥ ४ ॥

उद्यन्निशारमणवक्त्रमुपेन्द्रकन्या-
मुद्वोढुमादृतमनोज्ञपुलिन्दवेषम् ।
उन्मूलनार्थमुररीकृतदिव्यरूप-
मुद्वृत्तदैत्यविततेरुपयामि देवम् ॥५॥

ऊरीकृतस्वचरणैकपरायणं तं
दूरीकृतात्मविमुखात्मजनं भजामः ।
ऊहस्वरूपमुपगीतमकृत्रिमाणां
मूर्धस्थितैरपि गिरां वचनैः कुमारम् ॥६॥

ऋक्सामवर्णितपदं यजुषानुगीत-
मृष्यादियुक्तनिजमन्त्रजपैकतानान् ।
(ह?ऋ)द्धास्पदं गमयितारमृतस्वरूप-
मृच्छाम्यहं शरणमात्मजमिन्दुमौलेः ॥७॥

एकान्तभक्तिसुलभं जगदेकनाथ-
मेकातपत्रविभवप्रदमाश्रितानाम् ।
एकाग्रगम्यपदमेकरदानुजात-
मेधामहे शरवणोद्भवमेयिवांसः ॥८॥

ऐश्वर्यसिद्धिमथवा सुखमैहिकं वा-
प्यैकाधिपत्यमवनेरपि वामरत्वम् ।
ऐतुं यदीच्छसि मनः! शरणं भजेथा
ऐशानमङ्गजमुमागुरुभागधेयम् ॥९॥

ओङ्कारमन्त्रपदवाच्यमजं वदन्त-
मोजोमदादपरथा प्रविवेश्य काराम् ।
लोकान् ससर्ज निखिलान् निजयैव शक्त्या
यो योगिनं तमजरं गुहमाश्रयामः ॥१०॥

औदार्यवारिनिधिमास्पदमौचितीना-
मौद्धत्य(पद्ध?वद्दि)तिसुतौघभिदापटिष्ठम् ।
औन्नत्यमाशु ददतं सकृदानताना-
मौपम्यहीनचरितं गुहमानमामः ॥ ११ ॥

कल्याणभूमिधरकार्मुकपुण्यपाकः
कन्दर्पकोटिकमनीयकलेवरश्रीः ।
कल्पद्रुकल्पकरकल्पितशक्तिशाली
कामान् ममाशु सफलीकुरुतां कुमारः ॥ १२ ॥

खेदं परित्यज मनः! खलसेवनोत्थं
खेलाशु खण्डपरशोः सुकृते कुमारे ।
खेलाविधूतखलदानवयूथपोऽयं
खेदं न जातु सहते स्वपदाश्रितानाम् ॥ १३ ॥

गाङ्गेयकुङ्कुमजपारुणचारुगात्रं
गङ्गाधराननसरोजसरोजबन्धुम् ।
गाङ्गेयमाश्रय मनो! बहुचिन्तयालं
गङ्गातरङ्गवदयं श्रिततापहारी ॥ १४ ॥

घोरालिकार्पितालिपि(वि)धिने(यि? ति) चेतो
घूर्णस्यजस्रमयि! किं गुहमाश्रयेथाः ।
घूकं दिनेश इव कोटरमेष देवः
कारागृहान्तमनयत् खलु तं विरिञ्चम् ॥ १५ ॥

ङित्प्रत्यये सति परे गुणवृद्ध्यभावः
स्यात् सार्वधातुकपिता यदि न व्यवायः ।
जन्तोः कथं बलवती विधिदुर्लिपिः स्यात्
सर्वातिगो यदि गुहो हृदयं प्रविष्टः ॥ १६ ॥

चक्रायुधप्रियसुतामुखचञ्चरीक-
श्चन्द्रावतंसिचरणायुधचारुहस्तः ।
चेतो भवानिकुचकोरकपूर्णचन्द्र-
श्चित् ते चकास्तु धृतचन्द्रकभृत् कुमारः ॥ १७ ॥

छिन्नाखिलाघशमले स्वपदाश्रितानां
छायातरौ भवमहोष्मविशोषितानाम् ।
छन्दानुरूपफलदे सुरसैन्यनाथे
छन्दोमये मम मनो रमतां नितान्तम् ॥ १८ ॥

जानामि धर्ममयि! तत्र न तु प्रवर्ते
जानाम्यधर्ममपि नैव ततो निवर्ते ।
जानासि सर्वहृदयं जगदन्तरात्मन्!
जातं ममापचरितं सकलं क्षमेथाः ॥ १९ ॥

ज्ञाताखिलागमरहस्यतमार्थमेतं
ज्ञात्वा समाश्रय गुहं शरणं शरण्यम् ।
ज्ञानं ददीत तदयं हृदयाशु तुभ्य-
मेवंविधो न भविता तव येन मोहः ॥ २० ॥

झञ्झासमीरणमघौघघनच्छटानां
सिद्धौषधं भवभयामयविह्वलानाम् ।
चिन्तामणिं प्रणमतां करुणाम्बुराशिं
गौरीसुतं गुहमहं शरणं प्रपद्ये ॥ २१ ॥

टङ्कायमाननिजकोपमशेषलोक-
बाधा(करा)सुरमहोपलजालकानाम् ।
क्रौञ्चाद्रिभेदपरिगुप्तसमस्तलोक-
मञ्चामि किञ्चन हृदा शिवभागधेयम् ॥ २२ ॥

टृत्कारमाशु परिपातय तं कठोरं
मद्वैरिकण्ठकुहरेषु गुहाविषह्यम् ।
यः प्रागुदस्थित भवद्भुजशक्तिविद्ध-
क्रौञ्चाद्रिभेदसमये दितिजाद्रिवज्रः ॥ २३ ॥

डम्भापहारिचरितं दनुजेश्वराणां
जम्भारिराज्यदमडम्भजनानुकूलम् ।
सम्भावयामि शरकाननसम्भवं तं
पक्वं फलं हृदि पुरारिपुराकृतानाम् ॥ २४ ॥

ढक्के समस्तहृदयाब्जगुहाशयं तं
पश्यामि पातकमहागजपश्चवक्त्रम् ।
पश्चायुधारिमृदुलाङ्ककृताधिवासं
क्रौञ्चारिमद्य शरणं मनसा शरण्यम् ॥ २५ ॥

णान्तं वनं भवति मानस(यश्च)त्वरं चेत्-
तस्मिन् सरस्तदुदरे कमलं तदन्तः ।
किञ्चिन्महात्रिनवषड्युगवक्त्रदग्दो-
स्तद्भेषजं भवरुजो भज गुह्यमेतत् ॥ २६ ॥

तत्कालतप्ततपनीयमयं किरीटं
ताराधिपार्धमणिमौक्तिकशोभितान्तम् ।
तारावलीशशिपरीवृतमेरुशङ्कां
तन्वत् तनोतु कुशलं मम तारकारेः ॥ २७ ॥

स्थेयः शिवं दिशतु मे स्थिरधन्वसूनोः
कोटीरनद्धनवरत्नमरीचिविद्धम् ।
इन्द्रायुधोपमितमिन्दुकलावदातं
लोलम्बलोलदलकोल्लसितं ललाटम् ॥ २८ ॥

दैन्यं ममापहरतां दहनोद्भवस्य
कारुण्यवेल्लननियन्त्रितसर्वलोकम् ।
दिव्यं भ्रुवोर्युगलमीषदरालरम्यं
दूरास्तदर्पकशरासनदर्पभारम् ॥ २९ ॥

धून्वन्तु मे दुरितमाशु दिशन्तु सौख्यं
धीरस्य धूर्जटिसुतस्य कटाक्षमालाः ।
धूतारविन्दरुचयः करुणामरन्द-
धारातिमात्रशिशिराः कमलानिवासाः ॥ ३० ॥

नासापुटं नलिननाभसहोदरस्य
नासीरनेतुरनिशं कुशलानि कुर्यात् ।
निम्नोन्नतं नवतिलप्रसवाभिरामं
नीचैस्तरीकृतसुचम्पककोरकाभम् ॥ ३१ ॥

पातां परस्परसमौ गुरुपद्मराग-
पाषाणदर्पणसमानरुची कपोलौ ।
पर्यन्तलम्बिमणिकुण्डलमण्डितान्तौ
पाटीरशैलपवमानसखारिसूनोः ॥ ३२ ॥

फुल्लारविन्दसदृशं फलतु श्रियं मे
फालान्तलोचनभवस्य मुखं प्रसन्नम् ।
स्फारस्फुरद्दशनमौक्तिकमन्दहासं
श्मश्रुप्ररोहमधरोष्ठपुटप्रवालम् ॥ ३३ ॥

बर्हीन्द्रकेतनरतस्य मुखाब्जनालो
बुद्धिप्रदोऽस्तु शुभदो मम कम्बुकण्ठः ।
बन्धूकवर्णरुचिभिन्नरुचिप्रवाल-
बन्धूभवद्विशदमौक्तिकहारहारी ॥ ३४ ॥

भद्राङ्कभद्रतनयस्य भुजा भवेयु-
भद्राय मे भुवनरक्षणजागरूकाः ।
भास्वत्सुवर्णवलयाङ्गदकाङ्गुलीया
भक्ताखिलेष्टफलदानसुरद्रुशाखाः ॥ ३५ ॥

मन्दारमाल्यमकरन्दमिलद्द्विरेफ-
मालामनोहरमुरो हरनन्दनस्य ।
माङ्गल्यमावहतु माधवकन्यकाया
माणिक्यहारिकुचकुङ्कुमपङ्कशोणम् ॥ ३६ ॥

यज्ञेश्वरस्य यजमानतनोर्गुहस्य
योगेश्वरस्य जठरं जगतां निधानम् ।
युक्तेन योजयतु मां त्रिवलीविरूढ-
रोमावलीलसितवृत्तगभीरनाभम् ॥ ३७ ॥

रत्नानुविद्धरमणीयसुवर्णकाञ्ची-
रेखापिनद्धकनकान्तदुकूलकान्तम् ।
रामावलीहृदयसंवननं सदा मां
रक्षेत् पुलिन्दरमणीरमणस्य मध्यम् ॥ ३८ ॥

लक्ष्मीविलासभवनं कदलीकमेत-
ल्लीलानुकारि (ललितराम? ललितान्तर)मूरुयुग्मम् ।
लावण्यशालि लघयेन्मम दैन्यभारं
लोकोत्तरस्य ललिताकुलनन्दनस्य ॥ ३९ ॥

वाचामगोचरमनोहरवा(ग? म)रूपं
वामार्धजानिजनुषः किल जानुयुग्मम् ।
वन्दे वरेण्यमणिदर्पणमञ्जुवृत्तं
वन्दारुवाञ्छितवरप्रददिव्यरत्नम् ॥ ४० ॥

शम्भोः सुतस्य शतपत्रशरासतूणी-
शङ्कावहे शबरराजसुताभिकस्य ।
शश्वत्(क)राब्जमृदिते शतमन्युपुत्र्या
शृङ्गारिते शमयतां शमलं सुजङ्घे ॥ ४१ ॥

षड्युग्मषड्भुजमुखस्य पदारविन्दे
षड्वैरिवर्गशमने मम जीव एषः ।
षड्भिः समेत्य करणैः सह षट्पदत्वं
षट्पङ्कजोपरि गतो रमतां सुखेन ॥ ४२ ।

स्कान्दं सदा स्फुरतु मे मनसि स्वरूपं
सर्वाङ्गसुन्दरतरं सरसं समग्रम् ।
सच्चिन्मयं सकलसत्त्वहिते निविष्टं
साक्षात्सदाकृतसदाशिवभागधेयम् ॥ ४३ ॥

हेरम्बसोदर! हिरण्मयकुण्डलाय
हेमाङ्गदाय हिमशैलसुतासुताय ।
हेतोः समस्तजगतां हितचाष्टिताय
हे शूरपद्मकुलकाल! नमो नमस्ते ॥ ४४ ॥

क्षोणीधरक्षितिपभूरमणान्ववाय-
क्षीरार्णवोदर(दरव? भव)क्षणदाकरेण ।
क्षन्तव्यमेव भवता गुह! साहसं मे
क्षुद्रस्य तावकगुणस्तवनाय जातम् ॥ ४५ ॥

---

श्री

# ॥ सुवर्णमुक्तावलीस्तुतिः ॥

[स्तुतिरियम् आदिक्षान्तवर्णावल्या समारब्धत्वाच्चारुवर्णकलितत्वाच्च द्वेधा सार्थनाम्नी T. 68 अङ्काङ्कितात् प्रतिरूपितग्रन्थादुद्धृता । इतः पूर्वम् Vol. X, No. 4 तमे पुस्तके मुद्रितः कुमारस्तवोऽपि एतस्मादेव ग्रन्थादुद्धृतः । उभयोरप्यनयोर्नितरामस्ति सादृश्यमित्युभावप्येतावेकस्यैव कवेः प्रतिभाविलास इति भाति ।

अद्वैतमक्षरमनन्तमभक्तलोकै-
रज्ञेयतत्त्वमनुमेयमतीन्द्रियज्ञैः ।
अव्यक्तमर्चयदनुग्रहणात्तरूप-
मन्तःपुरं पुररिपोररुणं भजामः ॥ १ ॥

आताम्रमात्तधनुरङ्कुशपाशबाण-
मादर्शनिर्मलकपोलकमायताक्षम् ।
आनन्दचिन्मयमहः स्तुतमागमान्तै-
रार्याख्यमार्तिहरमाशु ममान्तरास्ताम् ॥ २ ॥

इन्द्रादिदिव्यपददामियतीत्यमेया-
मिन्दीवराक्षियुगलीमितिहासवेद्याम् ।
इन्दुप्रकाशवदनामिभराजयाता-
मिष्टार्थदां भगवतीमिह चिन्तयामि ॥ ३ ॥

ईशित्वमुख्यफलदां जगदीश्वरीं ता-
मीशानवामनिलयामियतीदृशीति।
ईक्षावतामविषयं महदीहिताङ्घ्रि-
मीडे परां सुरगवीमहमीप्सितानाम् ॥ ४ ॥

उन्निद्रपङ्कजमुखीमुदितारुणाभा-
मुद्वृत्तपीवरकुचामुपगीयमानाम्।
उच्चैस्तरामुपनिषद्भिरुपासकाना-
मुच्चावचेष्टफलहेतुमुमामुपासे ॥ ५ ॥

ऊरीकृतात्मचरणार्पितचित्तवृत्ति-
मूर्ध्वस्थितां निगममौलिभिरूह्यमानाम्।
ऊनेतरार्थफलदां परमेश्वरोढा-
मूढत्रिलोकभरणां जननीं प्रपद्ये ॥ ६ ॥

ऋग्भिर्यजुर्भिरपि सामभिरर्चकाना-
मृद्धिप्रदाननिरतामृतुहूयमानाम्।
ऋत्विग्भिरध्वरमयीमृतसत्यनेत्रा-
मृज्वीमृभुक्षमहितामनुसन्दधामि ॥ ७ ॥

एकान्तभक्तिसुलभामतिमात्ररम्या-
मेकातपत्रफलदां सकृदर्चकानाम्।
एतादृशीत्यविदितां निगमावलीभि-
रेकामनेकजननीं वयमाश्रयामः ॥ ८ ॥

ऐक्यं त्वया सह महेश्वरि! लब्धुकामा
नैकाधिपत्यमवनेरपि कामयन्ते।
ऐश्वर्यसिद्धिमतुलामपि याचमानो
जिह्रेमि केवलमहं सुखमैहिकं त्वाम् ॥ ९ ॥

ओतं समस्तभुवनं यदमेयशक्ता-
वोजस्वि भाति कलयन्ति तपांसि यस्याम्।
ओकोऽप्ययातुमनसः समुपास्महे ता-
मोङ्कारदिव्यकमलाकरराजहंसीम् ॥ १० ॥

औदार्यमाश्रितजनेषु तवातिमातृ
औपम्यहीनमिति सर्वजग(त्य?त्प्र)सिद्धम्।
औचित्यमम्ब! किमिदं यदुपेक्षसे मा-
मौर्वाग्निदुर्विषहदैन्यविदूयमानम् ॥ ११ ॥

कल्याणमावहतु मे कमलाविरिञ्च-
कान्ताकरान्तधृतचामरशोभिपार्श्वम्।
कल्याणशैलनिलयं किमपि स्वरूपं
कोदण्डबाणसृणिपाशकरारविन्दम् ॥ १२ ॥

खेलन्तु मे मनसि खेचरमौलिमाला-
लोलन्मणीकिरणरञ्जितपादुकायाः।
पादाब्जरेणुकणिकाः परदेवताया
वोढुं शिवः शिरसि या हि बिभर्ति गोत्रम् ॥ १३ ॥

गङ्गाधरप्रणयिनीचरणारविन्दे
शृङ्गारकन्दलितकान्तिझरीमरन्दे ।
भृङ्गायतां मम मनः पुरुषार्थकन्दे
तुङ्गानुभाविनि मिलन्मुनिहंसवृन्दे ॥ १४॥

घर्मान्तकालजलमुक्पटलीधुरीणे
घोरामयानिलदवानलतापभाजाम् ।
यस्यागमे प्रणतमोहतमस्ततीना-
मङ्घ्रिद्वये लगतु मे हृदयं शिवायाः ॥ १५॥

ङ्यावन्तवाच्यमितरच्च समस्तमेतद्
यस्या विभाति कलया समनुप्रविष्टम् ।
तस्यामनन्तसुखचिन्मयविग्रहायां
लीये गिरीशगुरुभाग्यपरम्परायाम् ॥ १६॥

चन्द्रार्धशेखरमिनेन्दुहुताशनेत्रं
चारुस्मितास्यमरुणं परमाणुमध्यम् ।
चामीकराभरणमुच्चकुचं मनोज्ञं
चित्ते चकास्तु तरुणं शिवकामि तेजः ॥ १७॥

छायामहीरुहि भवोपरमार्गभाजां
छायाविधूतकुरुविन्दमणिप्रभायाम् ।
छायेव सज्जतु मणौ मम चेतनेयं
त्रैलोक्यमातरि महेश्वरवल्लभायाम् ॥ १८॥

जन्तोर्ललाटलिखितापि लिपिर्विधात्रा
जन्मान्तराचरितपातकसूचयित्री।
जायेत दिव्यसुखदा यदपाङ्गदृष्ट्या
जायामुमां पुरभिदो हृदि मन्महे ताम् ॥ १९ ॥

झञ्झामरुद्भिरिव दुस्सहमेघमेलाः
शीर्यन्ति सर्वविपदः करुणाकटाक्षैः।
यस्याः सकृत् प्रणतमातृपदाम्बुजाया(?)-
स्तां सर्वलोकजननीं शरणं प्रपद्ये ॥ २० ॥

ञियष्फडीषु विहितासु कतप्रकृत्या
यद्रूपमुल्लसति तत् खलु नाम यस्याः।
ज्ञानप्रदं सकलरोगहरं पवित्रं
तां भावयामि मनसा हिमशैलकन्याम् ॥ २१ ॥

टङ्कायते विपुलपापमहोपलानां
यस्याः सकृच्चरणयोर्विहितः प्रणामः।
तामाश्रये सुखकरीं जगतां त्रयाणां
निश्शेषदुःखशमनाय सतीं भवानीम् ॥ २२ ॥

ठङ्कारकल्पमणिमध्यविराजमान-
ताटङ्करत्नयुगलायितपुष्पवज्ञाम्।
देदीप्यमानमणिदर्पणतुल्यगण्डां
कामेश्वराङ्कनिलयां प्रणमामि गौरीम् ॥ २३ ॥

डोलायमानमनसां बहुचिन्तयालं
दारिद्र्यदुःखभयया भविनां यदीये।
पादाम्बुजन्मनि रतिः सुरशाखिशाखा
सा पार्वती शरणमद्य ममास्तु देवी ॥ २४ ॥

ढक्काधरस्य नटतो नटनायकस्य
नृत्तानुकारचतुरां चतुरास्यनूताम्।
आपन्नभक्तजनरक्षणजागरूका-
मम्बां भजे नतमनोरथकल्पवल्लीम् ॥ २५ ॥

णिङ्प्रत्ययोऽनुवदति प्रकृतेरिवार्थं
सृष्टिस्थितिक्षयकृतौ मिलनेन यस्याः।
सृष्टिस्थितिक्षयविधीन् विदधाति शम्भु-
स्तस्यै नमः प्रकृतये भुवनैकगत्यै ॥ २६ ॥

तन्वी तटित्तनुलता तरुणेन्दुवक्त्रा
तारुण्ययोगललिता तरलायताक्षी।
ताम्राधरा तरलहारकुचान्तराला
तापापहा भगवती भवतात् पुरस्तात् ॥ २७ ॥

थुद् सस्य सन्निव परस्य परोपकाराद्
यत्सेवकस्य निटिलोपरि चन्द्रखण्डः।
आगच्छति प्रणतवाञ्छितकल्पवल्ली-
माराध्महे मनसि हैमवतीं कुमारीम् ॥ २८ ॥

दीनावनैकनिरतां भुवनाधिपत्य-
दानप्रवीणचरणाम्बुरुहोपहाराम्।
देवीं दयार्द्रनयनां दधतीमुपासे
पाशेक्षुचापसुमबाणसृणीन् कराब्जैः ॥ २९ ॥

ध(न्यां कुऽन्यं य)शस्यमतिपावनमामयघ्नं
धैर्यावहं सुखकरं भवरोगहारि।
धामप्रदं भयहरं चरितं यदीयं
धात्री धराधरसुता मम सा प्रसीदेत् ॥ ३० ॥

नामावली नयति कीर्तयतो यदीया
नाकं नरानधिकदुष्कृतकारिणोऽपि।
नारायणस्य सहजां सहजार्द्रभावां
नाथामि तां शुभगतिं नगराजपुत्रीम् ॥ ३१ ॥

पञ्चास्यमञ्चनिलयां परमात्मरूपां
पञ्चोपचारसरसां परिपूर्णकामाम्।
पञ्चायुधाभयकरीं परचित्प्रकाशां
पञ्चापहारिचरितां गिरिजामुपासे ॥ ३२ ॥

फुल्लारविन्दवदने! फलदे! क्रियाणां
फालेक्षणार्जितसुकर्मफलस्वरूपे!।
कल्हारगन्धचिकुरे! कुरुविन्दशोभे!
कारुण्यशालिनि! विलोकय मामपाङ्गैः ॥ ३३ ॥

बालामृतांशुकलिकापरिशोभिफाले !
बालारुणारुणशरीरमरीचिमाले !।
त्रैलोक्यपालिनि ! विलोकयितुं शिवे ! मां
कालोऽयमेव करुणाशिशिरैः कटाक्षैः ॥ ३४ ॥

भद्राणि पश्यति भवत्य(पिको?धिपे,)जगत्यां
भग्नो न जातु न बिभेति कुतश्चनायम् ।
भाग्येन योऽत्र भजते तव पादपद्मं
भक्तिर्दृढा भवतु मे त्वयि भक्तवश्ये ! ॥ ३५ ॥

मातङ्गमञ्जुलगते ! महनीयमूर्ते !
मन्दारवल्लि ! भजतां मनसाधिगम्ये !।
माये ! महेश्वरविलासिनि ! मा तनिष्ठा
मायामहासरिति मज्जति मय्युपेक्षाम् ॥ ३६ ॥

या विश्वमात्ममहसा समनुप्रविष्टा
यामेव सर्वमनुयाति यया विभाति ।
यस्यै करोति समुदेति यतश्च रूपं
यस्या लयं व्रजति यत्र(च)सा त्वमेव ॥ ३७॥

राजा ( विभा?पि दा )सति भवानि! कटाक्षति श्री
राजानति श्रितजनो(रथनायि?रसनाति)वाणी ।
रामा रमान्ति खलु देवति देवि गेहं
त्वत्सेवकस्य नहि किं मयि वस्तु किं वा ॥ ३८॥

लक्ष्यीकुरुष्व ललिते ! ललितैः कटाक्षै-
र्लक्ष्मीकरैर्झटिति मां लघया(तु?शु) दैन्यम् ।
लोकप्रसिद्धमहिमावलिलाघवं ते
मा भूदयं तव जनो भुवि सीदतीति ॥ ३९ ॥

वाचस्पतिर्भवति मूकतमोऽपि पङ्गु-
र्वारान्निधींस्तरति दर्शयतेऽह्नि तारम् ।
अन्तेऽपि नाकमघवानतियाति देही
यत्पात्रमम्ब ! तव तं दिश मय्यपाङ्गम् ॥ ४० ॥

शंसन्ति शङ्करि ! शशाङ्ककलावतंसे !
शास्त्राणि सर्वजगतां भवतीं सवित्रीम् ।
शङ्कां विनायमघवानतिभक्तवन्मा-
मालोकयाम्ब ! समधीर्हि सुतेषु माता ॥ ४१ ॥

षड्गोऽपि साधुविमुखोऽपि षडास्यमातः !
षड्वैरिवर्गपरिभूतषडिन्द्रियोऽपि ।
षट्पङ्कजोपरिगते ! भवतीं प्रपन्नः
षट्कर्मगम्यपदमाश्रयते जनुष्मान् ॥ ४२ ॥

सत्त्वं रजस्तम इति प्रकृतेर्गुणैस्ते
सर्गस्थितिप्र(मव?लय)संस्थितहेतुभूतैः ।
स्रष्टाविभुप्रभृतयो न विदुः स्वरूपं
सत्यं तवाम्ब ! नुतये भुवि कोऽलमन्यः । ४३ ॥

हालामदारुणिमहारिहनुप्रदेशे !
　हालाहलाशनसुखावहदिव्यमूर्ते ! ।
हर्यश्वमुख्यहरिदीशनुतेऽम्ब ! मास्मान्
　हासीस्त्वदेकशरणानतिदीनभावान् ॥ ४४ ॥

क्षित्यादिभूतमयि ! किञ्चिदपि त्वदिच्छां
　क्षेत्रज्ञरूपिणि ! विना चलितुं न शक्तम् ।
क्षन्तव्यमेव कृतमम्ब ! शुभाशुभं मे
　क्ष्माभृत्सुते ! पतिनिदेशकरा हि भृत्याः ॥ ४५ ॥

एतां मया विरचितां वरद ! 'सुवर्ण-
　मुक्तावलीं' तव मुदे जगदेकमातः ! ।
प्रत्यर्पयामि कृपया परिगृह्य कुर्या
　वक्षोजकुङ्कुमरसैः सरसां समग्याम् ॥ ४६ ॥

---

## IN THE PRESS

1. Bhojanakutūhala (Dietetics) of Raghunātha. Part. II.
2. Sarasvatīkaṇṭhābharaṇa (Grammar) of Bhoja with the commentary Hṛdayahāriṇī by Daṇḍanāthanārāyaṇa Part. V.
3. Prakriyāsarvasva (Grammar) by Nārāyaṇa Bhaṭṭa. Part. V.
4. Mīmāṁsāślokavārtika of Kumārilabhaṭṭa with the commentary Kāśikā by Sucaritamiśra. Part. IV.
5. Aṅkaṇaśāstra. (Jyotiṣa)
6. Bhāgavatacampū of Rāmapāṇivāda.
7. Karaṇottama (Jyotiṣa) of Acyuta with commentary.

## READY FOR THE PRESS.

1. Aitareyāraṇyaka (Veda) with the commentary Mokṣapradā of Ṣaḍguruśiṣya.
2. Kalaśacandrikā. (Tantra).
3. Twenty Prabandhas (Campus) of Nārāyaṇa Bhaṭṭa.